॥ श्रीसुदर्शनसहस्रनामस्तोत्रम् ॥

श्री गणेशाय नमः ॥

श्रीसुदर्शन परब्रह्मणे नमः ॥

अथ श्रीसुदर्शन सहस्रनाम स्तोत्रम् ॥

कैलासशिखरे रम्ये मुक्तामाणिक्य मण्डपे ।
रक्तसिंहासनासीनं प्रमथैः परिवारितम् ॥ १॥

बद्धाञ्जलिपुटा भूत्वा पप्रच्छ विनयान्विता ।
भर्तारं सर्वधर्मज्ञं पार्वती परमेश्वरम् ॥ २॥

पार्वती --
यत् त्वयोक्तं जगन्नाथ सुभ्रुशं क्षेममिच्छताम् ।
सौदर्शनं रुते शास्त्रं नास्तिचान्यदिति प्रभो ॥ ३॥

तत्र काचित् विवक्षास्थि तमर्थं प्रति मे प्रभो ।
एवमुक्तस्त्वहिर्बुद्ध्न्यः पार्वतीं प्रत्युवाच ताम् ॥ ४॥

अहिर्बुद्ध्न्य --
संशयो यदि ते तत्र तं ब्रूहि त्वं वरानने ।
इत्येवमुक्ता गिरिजा गिरिशेन महात्मना ॥ ५॥

पुनः प्रोवाच सर्वज्ञं ज्ञानमुद्राधरं पतिम् ॥

पार्वत्युवाच --
लोके सौदर्शनं मन्त्रं यन्त्रन्तत्तत् प्रयोगवत् ॥ ६॥

सर्वं विज्ञातुमभ्यत्र यथावत् समनुष्ठितुम् ।
अतिवेलमशक्तानां तं मार्गं भृशमीछताम् ॥ ७॥

को मार्गः का कथिस्तेषाम् कार्यसिद्धिः कथं भवेत् ।
एतन्मे ब्रूहि लोकेश त्वदन्यः को वदेतमुम् ॥ ८॥

ईश्वर उवाच --
अहं ते कथयिश्यामि सर्व सिद्धिकरं शुभम् ।

अनायासेन यज्जस्वा नरस्सिद्धिमवाप्नुयात् ॥ ९॥

तश्च सौदर्शनं दिव्यं गुह्यं नामसहस्रकम् ।
नियमात् पठतां नृणां चिन्तितार्थ प्रदायकम् ॥ १०॥

तस्य नामसहस्रस्य सोऽहमेव ऋषिः स्मृतः ।
छन्दोनुष्टुप् देवता तु परमात्मा सुदर्शनः ॥ ११॥

श्रीं बीजं ह्रीं तु शक्तिस्सा क्लीं कीलकमुदाहृतम् ।
समस्ताभीष्ट सिध्यर्थे विनियोग उदाहृतः ॥ १२॥

शङ्खं चक्रं च चापादि ध्यानमस्य समीरितम् ॥

ध्यानं --

शङ्खं चक्रं च चापं परशुमसिमिशुं शूल पाशाङ्कुशाब्जम्
बिभ्राणं वज्रखेटौ हल मुसल गदा कुन्दमत्युग्र दंष्ट्रम् ।
ज्वाला केशं त्रिनेत्रं ज्वल दलननिभं हार केयूर भूषम्
ध्यायेत् षट्कोण संस्थं सकल रिपुजन प्राण संहारि चक्रम् ॥

॥ हरिः Oम् ॥

श्रीचक्रः श्रीकरः श्रीशः श्रीविष्णुः श्रीविभावनः ।
श्रीमदान्त्य हरः श्रीमान् श्रीवत्सकृत लक्षणः ॥ १॥

श्रीनिधिः श्रीवरः स्रग्वी श्रीलक्ष्मी करपूजितः ।
श्रीरतः श्रीविभुः सिन्धुकन्यापतिः अधोक्षजः ॥ २॥

अच्युतश्चाम्बुजग्रीवः सहस्रारः सनातनः ।
समर्चितो वेदमूर्तिः समतीत सुराग्रजः ॥ ३॥

षट्कोण मध्यगो वीरः सर्वगोऽष्टभुजः प्रभुः ।
चण्डवेगो भीमरवः शिपिविष्टार्चितो हरिः ॥ ४॥

शाश्वतः सकलः श्यामः श्यामलः शकटार्थनः ।
दैत्यारिः शारदस्कन्धः सकटाक्षः शिरीषगः ॥ ५॥

शरपारिर्भक्तवश्यः शशाङ्को वामनोव्ययः ।
वरूथीवारिजः कञ्जलोचनो वसुधादिपः ॥ ६॥

वरेण्यो वाहनोऽनन्तः चक्रपाणिर्गदाग्रजः ।
गभीरो गोलकाधीशो गदापणिस्सुलोचनः ॥ ७॥

सहस्राक्षः चतुर्बाहुः शङ्खचक्र गदाधरः ।
भीषणो भीतिदो भद्रो भीमाभीष्ट फलप्रदः ॥ ८॥

भीमार्चितो भीमसेनो भानुवंश प्रकाशकः ।
प्रह्लादवरदः बाललोचनो लोकपूजितः ॥ ९॥

उत्तरामानदो मानी मानवाभीष्ट सिद्धिदः ।
भक्तपालः पापहारी बलदो दहनध्वजः ॥ १०॥

करीशः कनको दाता कामपाल पुरातनः ।
अक्रूरः क्रूरजनकः क्रूरदंष्ट्रः कुलादिपः ॥ ११॥

क्रूरकर्मा क्रूररूपि क्रूरहारी कुशेशयः ।
मन्दरो मानिनीकान्तो मधुहा माधवप्रियः ॥ १२॥

सुप्रतप्त स्वर्णरूपी बाणासुर भुजान्तकृत् ।
धराधरो दानवारिर्दनुजेन्द्रारि पूजितः ॥ १३॥

भाग्यप्रदो महासत्त्वो विश्वात्मा विगतज्वरः ।
सुराचार्यार्चितो वश्यो वासुदेवो वसुप्रदः ॥ १४॥

प्रणतार्तिहरः श्रेष्टः शरण्यः पापनाशनः ।
पावको वारणाद्रीशो वैकुण्ठो विगतकल्मषः ॥ १५॥

वज्रदंष्ट्रो वज्रनखो वायुरूपी निराश्रयः ।
निरीहो निस्पृहो नित्यो नीतिज्ञो नीतिपावनः ॥ १६॥

नीरूपो नारदनुतो नकुलाचल वासकृत् ।
नित्यानन्दो बृहद्भानुः बृहदीशः पुरातनः ॥ १७॥

निधिनामधिपोऽनन्दो नरकार्णव तारकः ।
अगाधोऽविरलो मर्त्यो ज्वालाकेशः ककार्च्चितः ॥ १८॥

तरुणस्तनुकृत् भक्तः परमः चित्तसम्भवः ।

चिन्त्यस्सत्वनिधिः साग्रस्चिदानन्दः शिवप्रियः ॥ १९॥

शिन्शुमारश्शतमखः शातकुम्भ निभप्रभः ।
भोक्तारुणेशो बलवान् बालग्रह निवारकः ॥ २०॥

सर्वारिष्ट प्रशमनो महाभय निवारकः ।
बन्धुः सुबन्धुः सुप्रीतस्सन्तुष्टस्सुरसन्नुतः ॥ २१॥

बीजकेश्यो बको भानुः अमितार्चिर्पाम्पतिः ।
सुयज्ञो ज्योतिषश्शान्तो विरूपाक्षः सुरेश्वरः ॥ २२॥

वह्निप्राकार संवीतो रक्तगर्भः प्रभाकरः ।
सुशीलः सुभगः स्वक्षः सुमुखः सुखदः सुखी ॥ २३॥

महासुरः शिरच्छेता पाकशासन वन्दितः ।
शतमूर्ति सहस्रारो हिरण्य ज्योतिरव्ययः ॥ २४॥

मण्डली मण्डलाकारः चन्द्रसूर्याग्नि लोचनः ।
प्रभञ्जनः तीक्ष्णधारः प्रशान्तः शारदप्रियः ॥ २५॥

भक्तप्रियो बलिहरो लावण्योलक्षणप्रियः ।
विमलो दुर्लभस्सोम्यस्सुलभो भीमविक्रमः ॥ २६॥

जितमन्युः जितारातिः महाक्षो भृगुपूजितः ।
तत्त्वरूपः तत्त्ववेदिः सर्वतत्व प्रतिष्ठितः ॥२७॥

भावज्ञो बन्धुजनको दीनबन्धुः पुराणवित् ।
शस्त्रेशो निर्मतो नेता नरो नानासुरप्रियः ॥ २८॥

नाभिचक्रो नतामित्रो नधीश करपूजितः ।
दमनः कालिकः कर्मी कान्तः कालार्थनः कविः ॥ २९॥

वसुन्धरो वायुवेगो वराहो वरुणालयः ।
कमनीयकृतिः कालः कमलासन सेवितः ।
कृपालुः कपिलः कामी कामितार्थ प्रदायकः ॥ ३०॥

धर्मसेतुर्धर्मपालो धर्मी धर्ममयः परः ।
ज्वालाजिम्हः शिखामौळीः सुरकार्य प्रवर्तकः ॥ ३१॥

कलाधरः सुरारिघ्नः कोपहा कालरूपदृक् ।
दाताऽऽनन्दमयो दिव्यो ब्रह्मरूपी प्रकाशकृत् ॥ ३२ ।
सर्वयज्ञमयो यज्ञो यज्ञभुक् यज्ञभावनः ।
वह्निध्वजो वह्निसखो वञ्जुळद्रुम मूलकः ॥ ३३॥

दक्षहा दानकारी च नरो नारायणप्रियः ।
दैत्यदण्डधरो दान्तः शुभ्राङ्गः शुभदायकः ॥ ३४॥

लोहिताक्षो महारौद्रौ मायारूपधरः खगः ।
उन्नतो भानुजः साङ्गो महाचक्रः पराक्रमी ॥ ३५॥

अग्नीशोऽग्निमयः द्वग्निलोचनोग्नि समप्रभः ।
अग्निमानग्निरसनो युद्धसेवी रविप्रियः ॥ ३६॥

आश्रित घौघ विध्वंसी नित्यानन्द प्रदायकः ।
असुरघ्नो महाबाहूर्भीमकर्मा शुभप्रदः ॥ ३७॥

शशाङ्क प्रणवाधारः समस्थाशी विषापहः ।
तर्को वितर्को विमलो बिलको बादरायणः ॥ ३८॥

बदिरग्नस्चक्रवाळः षट्कोणान्तर्गतस्शिखीः ।
दृतधन्वा शोडषाक्षो दीर्घबाहूर्दरीमुखः ॥ ३९॥

प्रसन्नो वामजनको निम्नो नीतिकरः शुचिः ।
नरभेदि सिंहरूपी पुराधीशः पुरन्दरः ॥ ४०॥

रविस्तुतो यूतपालो युतपारिस्सताङ्गतिः ।
हृषिकेशो द्वित्रमूर्तिः द्विरष्टायुदभृत् वरः ॥ ४१॥

दिवाकरो निशानाथो दिलीपार्चित विग्रहः ।
धन्वन्तरिस्श्यामळारिर्भक्तशोक विनाशकः ॥ ४२॥

रिपुप्राण हरो जेता शूरस्चातुर्य विग्रहः ।
विधाता सच्चिदानन्दस्सर्वदुष्ट निवारकः ॥ ४३॥

उल्को महोल्को रक्तोल्कस्सहस्रोल्कस्शतार्चिषः ।
बुद्धो बौद्धहरो बौद्ध जनमोहो बुधाश्रयः ॥ ४४ ॥

पूर्णबोधः पूर्णरूपः पूर्णकामो महाद्युतिः ।
पूर्णमन्त्रः पूर्णगात्रः पूर्णषाड्गुण्य विग्रहः ॥ ४५॥

पूर्णनेमिः पूर्ननाभिः पूर्णाशी पूर्णमानसः ।
पूर्णसारः पूर्णशक्तिः रङ्गसेवि रणप्रियः ॥ ४६॥

पूरिताशोऽरिष्टदाति पूर्णार्थः पूर्णभूषणः ।
पद्मगर्भः पारिजातः परमित्रस्शराकृतिः ॥ ४७॥

भूबृत्वपुः पुण्यमूर्ति भूभृतां पतिराशुकः ।
भाग्योदयो भक्तवश्यो गिरिजावल्लभप्रियः ॥ ४८॥

गविष्टो गजमानीशो गमनागमन प्रियः ।
ब्रह्मचारि बन्धुमानी सुप्रतीकस्सुविक्रमः ॥ ४९॥

शङ्कराभीष्टदो भव्यः साचिव्यस्सव्यलक्षणः ।
महाहंसस्सुखकरो नाभाग तनयार्चितः ॥ ५०॥

कोटिसूर्यप्रभो दीप्तो विद्युत्कोटि समप्रभः ।
वज्रकल्पो वज्रसखो वज्रनिर्घात निस्वनः ॥ ५१॥

गिरीशो मानदो मान्यो नारायण करालयः ।
अनिरुद्धः परामर्षी उपेन्द्रः पूर्णविग्रहः ॥ ५२॥

आयुधेशस्शतारिघ्नः शमनः शतसैनिकः ।
सर्वासुर वधोद्युक्तः सूर्य दुर्मान भेदकः ॥ ५३॥

राहुविप्लोषकारी च काशीनगर दाहकः ।
पीयुषांशु परञ्ज्योतिः सम्पूर्ण क्रतुभुक् प्रभुः ॥ ५४॥

मान्धातृ वरदस्शुद्धो हरसेव्यस्शचीष्टदः ।
सहिष्णुर्बलभुक् वीरो लोकभृल्लोकनायकः ॥५५॥

दुर्वासोमुनि दर्पघ्नो जयतो विजयप्रियः ।
पुराधीशोऽसुराराातिः गोविन्द करभूषणः ॥ ५६॥

रथरूपी रथाधीशः कालचक्र कृपानिधिः ।

चक्ररूपधरो विष्णुः स्थूलसूक्ष्मशिशिखिप्रभः ॥ ५७॥

शरणागत सन्त्राता वेताळारिर्महाबलः ।
ज्ञानदो वाक्पतिर्मानी महावेगो महामणिः ॥ ५८॥

विद्युत् केशो विहारेशः पद्मयोनिः चतुर्भुजः ।
कामात्मा कामदः कामी कालनेमि शिरोहरः ॥ ५९॥

शुभ्रस्शुचीस्शुनासीरः शुक्रमित्रः शुभाननः ।
वृषकायो वृषारातिः वृषभेन्द्र सुपूजितः ॥ ६०॥

विश्वम्भरो वीतिहोत्रो वीर्यो विश्वजनप्रियः ।
विश्वकृत्  विश्वभो विश्वहर्ता साहसकर्मकृत् ॥ ६१॥

बाणबाहूहरो ज्योतिः परात्मा शोकनाशनः ।
विमलादिपतिः पुण्यो ज्ञाता ज्ञेयः प्रकाशकः ॥ ६२॥

म्लेच्छ प्रहारी दुष्टघ्नः सूर्यमण्डलमध्यगः ।
दिगम्बरो वृशाद्रीशो विविधायुध रूपकः ॥ ६३॥

सत्ववान् सत्यवागीशः सत्यधर्म परायणः ।
रुद्रप्रीतिकरो रुद्र वरदो रुग्विभेदकः ॥ ६४॥

नारायणो नक्रभेदी गजेन्द्र परिमोक्षकः ।
धर्मप्रियः षडाधारो वेदात्मा गुणसागरः ॥ ६५॥

गदामित्रः पृथुभुजो रसातल विभेदकः ।
तमोवैरी महातेजाः महाराजो महातपाः ॥ ६६॥

समस्तारिहरः शान्त क्रूरो योगेश्वरेश्वरः ।
स्थविरस्स्वर्ण वर्णाङ्गः शत्रुसैन्य विनाशकृत् ॥ ६७॥

प्राज्ञो विश्वतनुत्राता शृतिस्मृतिमयः कृति ।
व्यक्ताव्यक्त स्वरूपांसः कालचक्रः कलानिधिः ॥ ६८॥

महाध्युतिरमेयात्मा वज्रनेमिः प्रभानिधिः ।
महास्फुलिङ्ग धारार्चिः महायुद्ध कृतच्युतः ॥ ६९॥

कृतज्ञस्सहनो वाग्मी ज्वालामाला विभूषणः ।
चतुर्मुखनुतः श्रीमान् भ्राजिष्णुर्भक्तवत्सलः ॥ ७०॥

चातुर्यगमनश्चक्री चातुर्वर्ग प्रदायकः ।
विचित्रमाल्याभरणः तीक्ष्णधारः सुरार्चितः ॥ ७१॥

युगकृत् युगपालश्च युगसन्धिर्युगान्तकृत् ।
सुतीक्ष्णारगणो गम्यो बलिध्वंसी त्रिलोकपः ॥ ७२॥

त्रिनेत्रस्त्रिजगद्वन्ध्यः तृणीकृत महासुरः ।
त्रिकालज्ञस्त्रिलोकज्ञः त्रिनाभिः त्रिजगत्प्रियः ॥ ७३॥

सर्वयन्त्रमयो मन्त्रस्सर्वशत्रु निबर्हणः ।
सर्वगस्सर्ववित् सौम्यस्सर्वलोकहितङ्करः ॥७४॥

आदिमूलः सद्गुणाढ्यो वरेण्यस्त्रिगुणात्मकः ।
ध्यानगम्यः कल्मषघ्नः कलिगर्व प्रभेदकः ॥ ७५॥

कमनीय तनुत्राणः कुण्डली मण्डिताननः ।
सुकुण्ठीकृत चण्डेशः सुसन्त्रस्थ षडाननः ॥ ७६॥

विषाधीकृत विघ्नेशो विगतानन्द नन्दिकः ।
मथित प्रमथव्यूहः प्रणत प्रमदाधिपः ॥ ७७॥

प्राणभिक्षा प्रदोऽनन्तो लोकसाक्षी महास्वनः ।
मेधावी शाश्वथोऽक्रूरः क्रूरकर्माऽपराजितः ॥ ७८॥

अरी दृष्टोऽप्रमेयात्मा सुन्दरश्शत्रुतापनः ।
योग योगीश्वराधीशो भक्ताभीष्ट प्रपूरकः ॥ ७९॥

सर्वकामप्रदोऽचिन्त्यः शुभाङ्गः कुलवर्धनः ।
निर्विकारोऽन्तरूपो नरनारायणप्रियः ॥ ८०॥

मन्त्र यन्त्र स्वरूपात्मा परमन्त्र प्रभेदकः ।
भूतवेताळ विध्वंसी चण्ड कूष्माण्ड खण्डनः ॥ ८१॥

यक्ष रक्षोगण ध्वंसी महाकृत्या प्रदाहकः ।
सकलीकृत मारीचः भैरव ग्रह भेदकः ॥ ८२॥

चूर्णिकृत महाभूतः कबलीकृत दुर्ग्रहः ।
सुदुर्ग्रहो जम्भभेदी सूचीमुख निषूदनः ॥ ८३॥

वृकोदरबलोद्धर्त्ता  पुरन्दर बलानुगः ।
अप्रमेय बलः स्वामी भक्तप्रीति विवर्धनः ॥ ८४॥

महाभूतेश्वरश्शूरो नित्यस्शारदविग्रहः ।
धर्माध्यक्षो विधर्मघ्नः सुधर्मस्थापकश्शिवः ॥ ८५॥

विधूमज्वलनो भानुर्भानुमान् भास्वताम् पतिः ।
जगन्मोहन पाटीरस्सर्वोपद्रव शोधकः ॥ ८६॥

कुलिशाभरणो ज्वालावृतस्सौभाग्य वर्धनः ।
ग्रहप्रध्वंसकः स्वात्मरक्षको धारणात्मकः ॥ ८७॥

सन्तापनो वज्रसारस्सुमेधाऽमृत सागरः ।
सन्तान पञ्जरो बाणताटङ्को वज्रमालिकः ॥ ८८॥

मेखालग्निशिखो वज्र पञ्जरस्ससुराङ्कुशः ।
सर्वरोग प्रशमनो गान्धर्व विशिखाकृतिः ॥ ८९॥

प्रमोह मण्डलो भूत ग्रह शृङ्खल कर्मकृत् ।
कलावृतो महाशङ्खु धारणस्शल्य चन्द्रिकः ॥ ९०॥

छेदनो धारकस्शल्य क्षूत्रोन्मूलन तत्परः ।
बन्धनावरणस्शल्य कृन्तनो वज्रकीलकः ॥ ९१॥

प्रतीकबन्धनो ज्वाला मण्डलस्शस्त्रधारणः ।
इन्द्राक्षीमालिकः कृत्या दण्डस्चित्तप्रभेदकः ॥ ९२॥

ग्रह वागुरिकस्सर्व बन्धनो वज्रभेदकः ।
लघुसन्तान सङ्कल्पो बद्धग्रह विमोचनः ॥ ९३॥

मौलिकाञ्चन सन्धाता विपक्ष मतभेदकः ।
दिग्बन्धन करस्सूची मुखाग्निस्चित्तपातकः ॥ ९४॥

चोराग्नि मण्डलाकारः परकङ्काळ मर्दनः ।

तान्त्रीकस्शत्रुवंशघ्नो नानानिगळ मोचनः ॥ ९५॥

समस्थलोक सारङ्गः सुमहा विषदूषणः ।
सुमहा मेरुकोदण्डः सर्व वश्यकरेश्वरः ॥ ९६॥

निखिलाकर्षणपटुः सर्व सम्मोह कर्मकृत् ।
संस्थम्बन करः सर्व भूतोच्चाटन तत्परः ॥ ९७॥

अहितामय कारी च द्विषन्मारण कारकः ।
एकायन गदामित्र विद्वेषण परायणः ॥ ९८॥

सर्वार्थ सिद्धिदो दाता विधाता विश्वपालकः ।
विरूपाक्षो महावक्षाः वरिष्टो माधवप्रियः ॥ ९९॥

अमित्रकर्शन शान्तः प्रशान्तः प्रणतार्तिहा ।
रमणीयो रणोत्साहो रक्ताक्षो रणपण्डितः ॥ १००॥

रणान्तकृत् रताकारः रताङ्गो रविपूजितः ।
वीरहा विविधाकारः वरुणाराधितो वशीः ।
सर्व शत्रु वधाकाङ्क्षी शक्तिमान् भक्तमानदः ॥ १०१॥

सर्वलोकधरः पुण्यः पुरुषः पुरुषोत्तमः ।
पुराणः पुण्डरीकाक्षः परमर्म प्रभेदकः ॥ १०२॥

वीरासनगतो वर्मी सर्वाधारो निरङ्कुशः ।
जगत्रक्षो जगन्मूर्तिः जगदानन्द वर्धनः ॥ १०३॥

शारदः शकटारातिः शङ्करस्शकटाकृतिः ।
विरक्तो रक्तवर्णाढ्यो रामसायक रूपदृत् ॥ १०४॥

महावराह् दंष्ट्रात्मा नृसिंह नगरात्मकः ।
समदृङ्मोक्षदो वन्ध्यो विहारी वीतकल्मषः ॥ १०५॥

गम्भीरो गर्भगो गोप्ता गभस्तिर्गुह्यगोगुरुः ।
श्रीधरः श्रीरतस्श्रान्तः शत्रुघ्नस्शृतिगोचरः ॥ १०६॥

पुराणो विततो वीरः पवित्रस्चरणाह्वयः ।
महाधीरो महावीर्यो महाबल पराक्रमः ॥ १०७॥

सुविग्रहो विग्रहघ्नः सुमानी मानदायकः ।
मायी मायापहो मन्त्री मान्यो मानविवर्धनः ॥ १०८॥

शत्रुसंहारकस्शूरः शुक्रारिश्शङ्करार्चितः ।
सर्वाधारः परञ्ज्योतिः प्राणः प्राणभृतच्युतः ॥ १०९॥

चन्द्रधामाऽप्रतिद्वन्दः परमात्मा सुदुर्गमः ।
विशुद्धात्मा महातेजाः पुण्यश्लोकः पुराणवित् ॥ ११०॥

समस्थ जगदाधारो विजेता विक्रमः क्रमः ।
आदिदेवो ध्रुवो दृश्यः सात्त्विकः प्रीतिवर्धनः ॥ १११॥

सर्वलोकाश्रयस्सेव्यः सर्वात्मा वंशवर्धनः ।
दुराधर्षः प्रकाशात्मा सर्वदृक् सर्ववित्समः ॥ ११२॥

सद्गतिस्सत्वसम्पन्नः नित्यसङ्कल्प कल्पकः ।
वर्णी वाचस्पतिर्वाग्मी महाशक्तिः कलानिधिः ॥ ११३॥

अन्तरिक्षगतिः कल्यः कलिकालुष्य मोचनः ।
सत्यधर्मः प्रसन्नात्मा प्रकृष्टो व्योमवाहनः ॥ ११४॥

शितधारस्शिखि रौद्रो भद्रो रुद्रसुपूजितः ।
दरिमुखाग्निजम्भघ्नो वीरहा वासवप्रियः ॥ ११५॥

दुस्तरस्सुदुरारोहो दुर्ज्ञेयो दुष्टनिग्रहः ।
भूतावासो भूतहन्ता भूतेशो भूतभावनः ॥ ११६॥

भावज्ञो भवरोगघ्नो मनोवेगी महाभुजः ।
सर्वदेवमयः कान्तः स्मृतिमान् सर्वपावनः ॥ ११७॥

नीतिमन् सर्वजित् सौम्यो महर्षीरपराजितः ।
रुद्राम्बरीष वरदो जितमायः पुरातनः ॥ ११८॥

अध्यात्म निलयो भोक्ता सम्पूर्णस्सर्वकामदः ।
सत्योऽक्षरो गभीरात्मा विश्वभर्ता मरीचिमान् ॥ ११९॥

निरञ्जनो जितभ्रांशुः अग्निगर्भोऽग्नि गोचरः ।

सर्वजित् सम्भवो विष्णुः पूज्यो मन्त्रवितक्रियः ॥ १२०॥

शतावर्त्तः कलानाथः कालः कालमयो हरिः ।
अरूपो रूपसम्पन्नो विश्वरूपो विरूपकृत् ॥ १२१॥

स्वाम्यात्मा समरश्लाघी सुव्रतो विजयांवितः ।
चण्ड्घ्नस्चण्डकिरणः चतुरस्चारणप्रियः ॥ १२२॥

पुण्यकीर्तिः परामर्षी नृसिंहो नाभिमध्यगः ।
यज्ञात्म यज्ञसङ्कल्पो यज्ञकेतुर्महेश्वरः ॥ १२३॥

जितारिर्यज्ञनिलयश्शरण्यश्शकटाकृतिः ।
उत्त्मोऽनुत्त्मोनङ्गस्साङ्गस्सर्वाङ्ग शोभनः ॥ १२४॥

कालाग्निः कालनेमिघ्नः कामि कारुण्यसागरः ।
रमानन्दकरो रामो रजनीशान्तरस्थितः ॥ १२५॥

संवर्धन समरांवेषी द्विषत्प्राण परिग्रहः ।
महाभिमानी सन्धाता सर्वाधीशो महागुरुः ॥ १२६
सिद्धः सर्वजगद्योनिः सिद्धार्थस्सर्वसिद्धिदः ।
चतुर्वेदमयश्शास्था सर्वशास्त्र विशारदः ॥ १२७ ॥

तिरस्कृतार्क तेजस्को भास्कराराधितश्शुभः ।
व्यापी विश्वम्भरो व्यग्रः स्वयञ्ज्योतिरनन्तकृत् ॥ १२८॥

जयशीलो जयाकाङ्क्षी जातवेदो जयप्रदः ।
कविः कल्याणदः काम्यो मोक्षदो मोहनाकृतिः ॥ १२९॥

कुङ्कुमारुण सर्वाङ्ग कमलाक्षः कवीश्वरः ।
सुविक्रमो निष्कळङ्को विश्वक्सेनो विहारकृत् ॥ १३०॥

कदम्बासुर विध्वंसी केतनग्रह दाहकः ।
जुगुप्साग्नस्तीक्ष्णधारो वैकुण्ठ भुजवासकृत् ॥ १३१॥

सारज्ञः करुणामूर्तिः वैष्णवो विष्णुभक्तिदः ।
सुकृतज्ञो महोदारो दुष्कृतघ्नस्सुविग्रहः ॥ १३२॥

सर्वाभीष्ट प्रदोऽन्तो नित्यानन्दो गुणाकरः ।

चक्री कुन्दधरः खड्गी परश्वत धरोऽग्निभृत् ॥ १३३॥

दृताङ्कुशो दण्डधरः शक्तिहस्थस्सुशङ्खभ्रुत् ।
धन्वी दृतमहापाशो हलि मुसलभूषणः ॥ १३४॥

गदायुधधरो वज्री  महाशूल लसत्भुजः ।
समस्तायुध सम्पूर्णस्सुदर्शन महाप्रभुः ॥ १३५॥

॥ फलशृतिः ॥

इति सौदर्शनं दिव्यं गुह्यं नामसहस्रकम् ।
सर्वसिद्धिकरं सर्व यन्त्र मन्त्रात्मकं परम् ॥ १३६॥

एतन्नाम सहस्रं तु नित्यं यः पठेत् सुधीः ।
शृणोति वा श्रावयति तस्य सिद्धिः करस्तिता ॥ १३७॥

दैत्यानां देवशत्रूणां दुर्जयानां महौजसाम् ।
विनाशार्थमिदं देवि हरो रासाधितं मया ॥ १३८॥

शत्रुसंहारकमिदं सर्वदा जयवर्धनम् ।
जल शैल महारण्य दुर्गमेषु महापति ॥ १३९॥

भयङ्करेषु शापत्सु सम्प्राप्तेषु महत्सुच ।
यस्सकृत् पठनं कुर्यात् तस्य नैव भवेत् भयम् ॥ १४०॥

ब्रह्मघ्नश्च पशुघ्नश्च मातापितृ विनिन्दकः ।
देवानां दूषकश्चापि गुरुतल्पगतोऽपि वा ॥ १४१॥

जप्त्वा सकृतिदं स्तोत्रं मुच्यते सर्वकिल्बिषैः ।
तिष्ठन् गच्छन् स्वपन् भुञ्जन् जाग्रन्नपि हसन्नपि ॥ १४२॥

सुदर्शन नृसिंहेति यो वदेत्तु सकृन्नरः ।
स वै न लिप्यते  पापैः भुक्तिं मुक्तिं च विन्दति ॥ १४३॥

आदयो व्यादयस्सर्वे रोगा रोगादिदेवताः ।
शीघ्रं नश्यन्ति ते सर्वे पठनात्तस्य वै नृणाम् ॥ १४४॥

बहूनात्र किमुक्तेन जप्त्वेदं मन्त्र पुष्कलम् ।

यत्र मर्त्यश्चरेत् तत्र रक्षति श्रीसुदर्शनः ॥ १४५॥

इति श्री विहगेश्वर उत्तरखण्डे उमामहेश्वरसंवादे मन्त्रविधाने श्री सुदर्शन सहस्रनाम स्तोत्रं नाम षोडश प्रकाशः ॥